पुरुषबुद्धिपूर्वको वाक्यार्थो भवेत् । यथाऽन्यस्मादनुवाकादाख्यातपदं गृहीत्वाऽन्यस्माच्च नामपदं यो वाक्यार्थः संजन्यते तादृशं तद्भवेद्यत्रान्येन ध्यानादिना पूर्वपदार्थमवगम्य वाक्यार्थं संजनयेत् । तस्मान्नासंबद्धार्थ-व्यवधानैकवाक्यता भवतीति निश्चीयते । तस्मान्न सामिधेनीभिरेक-

वाक्यभेदोऽभ्युपगम्येत कथंचिद्वा परिह्रियेत ततो रेवतीवारवन्तीयसौभरादिष्वप्येवमेव वाक्येन प्रकृताश्रयदानात्सिद्धान्तहानिः । अथाऽऽश्रयलाभार्थं कथंचिदनुवर्तेत प्रकरणं तत उपवीतमपि तथैव प्राप्नोतीति सर्वथा संकटमेतत् । उच्यते ।

गुणात्कामो न युक्तोऽत्र विच्छिन्नप्रक्रियाश्रयात् ।
अनेकार्थविधिः शक्यो नापूर्वात्कर्मणो विना ॥

नैवात्रैकविंशत्यादेर्गुणात्फलम् । किं तर्हि । रेवतीवारवन्तीयादिवाक्यवदेवानेनापि विशिष्टं कर्म विधीयते । ततश्च भावार्थाधिकरणन्यायेन धात्वर्थात्फलम् । अत एकविंशत्यादिविशिष्टेनानुवचनेन प्रतिष्ठादि साधयेत् । कथमिति—अनुब्रूयादिति शब्दसामान्यात्संख्या-प्रत्यासत्तेश्च सामिधेन्यनुवचनवदिति गम्यते । ततश्च संख्येयानामृचामन्येषां च धर्माणां प्राप्तिः । यद्यपि चात्र कर्मान्तरत्वाकर्मान्तरत्वयोः फलं नास्ति तथाऽपि वाक्यमेवमव-कल्पत इतीत्थं वर्णितम् । न त्वेवं सत्येतान्यनुवचनान्तराणि दर्शपूर्णमासाभ्याम-गृहीतत्वात्पृथगेव प्रयोक्तव्यानि । न तावदेतेनास्मत्पक्षो निवर्त्यते । सर्वथोपवीतस्य सर्वार्थत्वसिद्धेः । न च स्वतन्त्रः प्रयोगः स्यात् । कुतः ।

पश्चाद्यस्योच्यमानोऽयमनुशब्दः प्रयुज्यते ।
न तस्यान्यप्रयुक्तत्वात्स्वातन्त्र्ये सति लभ्यते ॥

यो हि निगदः प्राक् सामिधेनीभ्यः प्रयुज्यते स निवित्पदवदेव न सामिधेन्यङ्गम् । तदनन्तरत्वेन चोच्यमानास्वनुब्रूयादिति विधिर्न स्वतन्त्राणाम् । तद्यदि पृथक् प्रयोगः स्यात्ततः सामिधेन्यङ्गमात्रग्रहणादितरेण निगदेन विनाऽनुवचनत्वं विहन्येत । किं च ।

सामिधेनीत्वमप्यासां न स्यादग्निसमिन्धनात् ।
न चाप्रयोगमध्यस्थः शक्यो वह्निः समिन्धितुम् ॥

एकविंशत्यादिभिस्तावदवश्यं सामिधेन्यः संख्यातव्याः । ताश्चाग्निसमिन्धनं प्रकाश-यन्त्यः सामिधेन्य इत्युच्यन्ते । स चाग्निः परप्रयुक्तस्ताभिः प्रकाशयितव्यः । तेन

१ (अ० २ पा० १ अ० १)। २ क्रतुप्रयुक्तेति पा० ।

वाक्यतोपवीतस्येति । ननु सामिधेनीकल्पनामनन्तरबुद्धानां संनिधावुपवीतमाम्नायते । तेन सामिधेनीभिः संभन्त्स्यत इति । नेति ब्रूमः । अतिवृत्तमेव हि सामिधेनीनां प्रकरणम् । निवित्पदैर्व्यवधानात् । वाक्येन हि सामिधेनीकल्पाः काम्याः संबन्धमुपगच्छन्ति न प्रकरणमनुवर्तते । न च पुनः कल्पवचनेन सामिधेन्यः प्रकृता भवन्ति । न हि तत्र तासां वचनं कर्तव्या इति । किं तर्हि । संख्याभिः संबन्धयितव्या इति । तदपि वाक्येन न प्रकरणेन । तत्राप्रकृतासु समिधेनीषु यस्यैकवाक्यता गुणस्य सामिधेनीभिर्नास्ति, न तस्य ताभिः संबन्धः । तस्मात्कृत्स्ने प्रकरणे यदनुष्ठेयं तद्यज्ञोपवीतिनेति सिद्धम् ॥ २१ ॥

## [ १२ ] गुणानां च परार्थत्वादसंबन्धः समत्वात्स्यात् ॥ २२ ॥ सि०

अग्न्याधेये वारणवैकङ्कतपात्राण्यहोमार्थानि होमार्थानि च श्रूयन्ते । तस्माद्वारणो वै यज्ञावचरः स्यान्न त्वेतेन जुहुयात् । वैकङ्कतो यज्ञावचरः स्यात्, जुहुयादेतेन इति । न च वारणवैकङ्कतानां पात्राणामग्न्याधेयेन संबन्धः । कुतः । यज्ञावचरवचनात् । यज्ञस्यैतानि पात्राणि

---

' अर्थाभिधानकर्म च ' इत्यस्य प्रकृतिवदनुप्रवेशात्प्राकृतस्य सामिधेनीकार्यस्याग्निसमिन्धनप्रकाशनस्यैतेनैव प्रसङ्गतः प्राप्तेरर्थात्प्रयोगमध्यपातिसमिन्धनाधीनत्वम् । नन्वेवमप्येषामेव काम्यानां कल्पानां सर्वेषामन्त्यस्य वोपवीतमङ्गं स्यात् । नैतदेवम् । कुतः ।

प्राकृतेन कथंभावे तदीये पूरिते सति ।
पश्चात्संनिधिनाऽङ्गं स्यात्स च प्रकरणावरः ।

सर्वास्वेव विकृतिषु यत्प्राकृताङ्गमध्ये न पठितं तदक्लृप्तोपकारत्वात्प्राकृतैर्निराकाङ्क्षीकृते प्रकरणे पश्चादागच्छत्संनिधिविषयो भवति । स चाविरोधे विनियुङ्क्ते, विरोधे तु विदेवनादिवत्प्रकरणेन बाध्यते । तस्मात्कृत्स्नदर्शपूर्णमासार्थमुपवीतमिति सिद्धम् ॥२१॥

( इति—उपवीतस्य दर्शपूर्णमासाङ्गताधिकरणम् ॥ ११ ॥ )

' आनर्थक्यात्तदङ्गेषु ' इत्यस्यापवाद आरभ्यते । वारणवैकङ्कतानि होमार्थान्यहो

---

१ सामिधेनीभिः—काम्यसामिधेनीभिरित्यर्थः । २ ( अ० ४ पा० १ अ० ११ सू०२६ ) । ३ ( अ० ३ पा० १ अ० ९ सू० १८ )

वाक्येन प्रकरणं बाधित्वा भवन्ति । तत्रैष संदेहः । किं पवमानेष्टिषु निविशन्त उत दर्शपूर्णमासादिषु सर्वयागेष्विति । किं तावत्प्राप्तम् । पवमानहविःष्विति । कुतः । उक्तमेतत्, प्रधानेऽसंभवन्पदार्थस्तद्गुणे कल्प्यत इति । अग्न्याधेयप्रकरणे च समाम्नानात्पवमानहविषां तद्गुणता । तस्मात्पवमानहविःष्वित्येवं प्राप्तम् । एवं प्राप्ते ब्रूमः । गुणानां समत्वात् । पवमानहविषामग्न्याधेयस्य च न परस्परेण संबन्धः । यथाऽऽधानमग्नेर्गुणः संस्कारार्थ एवं पवमानहवींष्यप्यग्नेरेव गुणभूतानि । कस्तत्र परस्परेण संबन्ध इति । यदुक्तमाधानस्य प्रकरणे समाम्नायन्त इति । यद्यपि समाम्नायन्ते तथाऽपि प्रकरणं बाधित्वा वाक्येनाग्नेर्भवन्ति । किमिह वाक्यम् । यदाहवनीये जुहोति तेन सोऽस्याभीष्टः प्रीतो भवति इति । नन्वाहवनीयोऽत्र यागस्याधिकरणत्वेन गुणभूतः श्रूयते । सत्यम् । अधिकरणमाहवनीयः । तथाऽपि त्वाहवनीयार्थ एव यागः । प्रयोजनवत्त्वादाहवनीयस्य निष्प्रयोजनत्वात्पवमानहविषाम् । कथमेषां निष्प्रयोजनता । फलाश्रवणात् । कल्प्यं फलमिति चेत् । सत्यं कल्प्यम् । अग्निसंस्कारस्तु तत्फलं, न स्वर्गः । स्वर्गे कल्प्यमाने द्विरदृष्टं कल्प्येत । होमाच्च स्वर्गो भवति । तस्य चाऽऽहवनीयेनापरोऽदृष्टः संस्कार इति ।

---

मार्थानि च पात्राणि यज्ञाङ्गामित्वेन विहितान्याधानप्रकरणं बाधित्वा कतमस्य यज्ञस्य भवन्त्विति 'आनर्थक्यात्तदङ्गेषु' इति पवमानहविःषु विज्ञायन्ते । तथा प्राप्तेऽभिधीयते ।

वाक्येनाऽऽधानतुल्यानि पवमानहवींष्यपि ।
तेनासति तदङ्गत्वे सर्वयज्ञार्थतेष्यते ॥

प्रकरणगम्या पवमानहविषामाधानार्थतां बाधित्वा वाक्येनाग्न्यर्थता विज्ञायते 'यदाहवनीये जुहृति' इति । तत्र चोद्यते । यद्यस्माद्वाक्यादाहवनीयः पवमानहविषां संस्कार्यो भवति ततः समानवाक्यनिर्देशादग्निहोत्रादीनामपि प्राप्नोति । अथ तेषां फलवत्त्वादाहवनीयोऽङ्गं ततः पवमानहविषामप्यङ्गमेव स्यात् । न ह्येकं वाक्यं फलवतां गुणभूतमफलानां च प्रधानभूतमाहवनीयं वक्तुं समर्थम् । विध्यनुवादोद्देश्योपादेयगुणप्रधानानां युगपद्विरोधात् । सप्तमी चैकत्र द्वितीयार्थं लक्षयति । अन्यत्र स्वार्थमेव वदतीति विरोधः । तथा च विश्वजिदादीनामश्रुतफलानामङ्गत्वप्रसङ्गः । सर्वं चायुक्तमेतत् । निष्पन्नश्चाऽऽहवनीय उपदिश्यते । फलवत्कर्मानुरोधेन च भाव्याहवनीयसंज्ञा

---

१ 'अग्नये पवमानाय' 'अग्नये पावकाय' 'अग्नये शुचये'—इत्येतैर्वाक्यैर्विहितेष्वित्यर्थः । २ (अ० ३ पा० १ अ० ९) इत्यत्रेति शेषः । ३ (अ० ३ पा० १ अ० ९ सू० १८) । ४ एवमुपपादितं सिद्धान्तभाष्यमाक्षिपति—तत्र चोद्यत इत्यादिना । ५ उपदिश्यत इति—फलवदग्निहोत्रादिकर्मणामिति शेषः ।

तस्मादग्न्यर्थता पवमानहविषाम् । नैषामाधानेन संबन्धः । तस्मान्नाऽऽधाने श्रूयमाणं, पवमानहविषां भवितुमर्हति । किं तर्हि । सर्वयागेषु दर्शपूर्णमासप्रभृतिष्वाधानस्य प्रधानभूतेषु निवेश इति ॥ २२ ॥

## [१३] मिथश्चानर्थसंबन्धात् ॥ २३ ॥ सि०

दर्शपूर्णमासयोः श्रूयते । वार्त्रघ्नी पौर्णमास्यामनूच्येते, वृधन्वती अमावस्यायाम्, इति । तत्र संदेहः । किमनुवाक्याद्वित्वस्य प्रधाने निवेश

विज्ञायते । तस्मात्किलैवं वर्णनीयम् । द्वे ह्येते वाक्ये तुल्यरूपे । पवमानहविष्प्रकरण एकमपरमनारभ्यवादे । तत्र प्राकरणिकेन निष्पाद्यमानत्वात्संस्कारापेक्षिण आहवनीयस्याफलानां पवमानहविष्प्रभृतीनां संस्कारत्वेन विधानम् । अनारभ्यवादेन तु निष्पन्नस्य सतः सर्वकर्माण्युद्दिश्याधिकरणत्वेन विधानम् । तस्मादविरोध इति । वयं तु ब्रूमः । किमनेनाश्रुतवाक्यकल्पनाक्लेशेन । अन्यथाऽप्येतदुपपद्यत एव । भवन्तु नाम पवमानहवींष्याधानाङ्गम् । तथाऽपि न तत्र पात्राणि भवन्ति । वाजपेयस्य यूप इति हि यूपग्रहणाद्व्यवहितसंबन्धेऽपि षष्ठ्युपपत्तेस्तथा कल्पितम् । न त्विहैवं किंचिदस्ति । यत्तु यज्ञावचरग्रहणं तत्प्रकृतयज्ञाभावादनारभ्यवादरूपेण सर्वत्र विदधाति । तच्चैतत्पूषाद्यनुमन्त्रणन्यायेनैव सेत्स्यतीति नार्थोऽधिकरणेन । सूत्रं तु पूर्वस्यैव[3] पदोत्तरत्वेन[4] नेयम् । ननु निविदां सामिधेन्यङ्गत्वान्न व्यवधायकत्वं स्यात् । अत आह—गुणानां च परार्थत्वादिति । तद्व्याख्यातम् । तथा हि ।

वदन्ति सामिधेनीवन्निविदोऽग्निसमिन्धनम् ।
संयुक्तत्वादतस्तासां नाङ्गं प्रकरणेन ताः ॥ २२ ॥

(इति–वारणादीनां सर्वयज्ञाङ्गताधिकरणम् ॥ १२ ॥)

---

यथासंयोगं[5] निवेशार्थमारम्भः । कुतः संदेह इति । संयोगस्यैव द्वेधा प्रतिभानात् ।

साधारण्येन संयोगः संदिग्धः कालकर्मभिः ।
विरुद्धः कर्मसंबन्धे न क्रमः कालसंगतौ ॥
तुल्यकक्षौ हि संबन्धौ विरुद्धौ न विलक्षणौ ।

---

१ 'अग्निर्वृत्राणि जङ्घनत् । द्रविणस्युर्विपन्यया', इत्यादि । एवं 'त्वं सोमासि सत्पतिः । त्वंराजोत वृत्रहा' इत्यादि च वार्त्रघ्नी युगलम् । 'अग्निः प्रत्नेन जन्मना । शुम्भानस्तनुवं स्वाम् । कविर्विप्रेण वावृधे' इत्यादि । एवं 'सोमगीर्भिष्ट्वा वयम् । वर्धयामो वचोविदः' इत्यादि च वृधन्वतीयुगलम् । तै० ब्रा० ( ३–५–६ । ) । २ एवमाक्षिप्तं भाष्यं परमतेन समाधातुमारभते—तस्मादित्यादिना । ३ पूर्वस्यैव—संदिग्धे तु व्यवायात् ' इति सूत्रस्यैव शेषतयेत्यर्थः । ४ पदोत्तरत्वेन—शङ्कापदोत्तरत्वेनेत्यर्थः । ५ यथासंयोगमिति—आज्यभागक्रमाम्नातस्य वार्त्रघ्नीवृधन्वतीमन्त्रचतुष्टयस्य क्रमावगताज्यभागसंबन्धावाधेन निवेशार्थमित्यर्थः ।

उताऽऽज्यभागयोरिति । किं तावत्प्राप्तम् । प्रधान इति । कुतः । पौर्णमासीसमभिव्याहारादमावास्यासमभिव्याहाराच्च । प्रधानं पौर्णमासी चामावस्या च, नाऽऽज्यभागौ । तस्मात्साक्षाद्वाक्यात्प्रधानस्येति प्राप्तम् । तत्र ब्रूमः । मिथः सह द्वाभ्यामनुवाक्याभ्यां न प्रधानस्य कार्यमस्ति । यत्र तु द्वे अनुवाक्ये तत्र तयोर्वार्त्रघ्नता वृधन्वत्ता च विधी न प्रधाने चैकाऽनुवाक्या। तत्र द्वित्वं वार्त्रघ्नतां वृधन्वत्तां च विदधद्वाक्यं भिद्येत । आज्यभागयोस्तु द्वे प्राप्ते आग्नेयी सौमी च । तत्र वार्त्रघ्नतां वृधन्वत्तां केवलां शक्ष्यति विधातुम् । ननु प्रधानगामित्वेऽपि द्वयोः प्रधानयोर्द्वे अनुवाक्ये आग्नेयस्याग्नीषोमीयस्य चेति । उच्यते । एका वार्त्रघ्न्याग्नेयी, एका सौमी । तथा वृधन्वत्यौ । तत्र याऽऽग्नेयी सा विधीयमाना संबध्येत न सौमी । अमावास्यायां तावन्नास्त्येव सोमः । पौर्णमास्यामप्यग्नीषोमीय एव क्रियमाणे क्रियेत । तत्राप्येकदेवत्या न शक्नुयाद्देवताद्वित्वे कार्यं कर्तुम् । अथोभे अग्नीषोमीये प्राप्ते इति ।

---

तुल्यत्वं कर्मसंबन्धे वैषम्यं कालसंगतौ ॥
नित्यं तत्रानुवाक्याभियोगानामेव संगतिः ।
न कालयोः क्रमस्तस्मात्प्रधानाङ्गतया हतः ॥
गुणानां च परार्थत्वादित्यनेनापि हेतुना ।
संबद्धं नाऽऽज्यभागाभ्यामनुवाक्याचतुष्टयम् ॥

तस्मादाज्यभागक्रमं बाधित्वा वाक्येन प्रधानार्थत्वे प्राप्तेऽभिधीयते ।

मिथश्चानर्थसंबन्धादिष्टो नाङ्गाङ्गिसंगमः ।
न चेहास्त्यनुवाक्यानां प्रधानैरर्थसंगतिः ॥
द्वे तावन्नानुवाक्ये स्तः कर्मैकत्वे कथंचन ।
द्वयोरपि च नैवैते देवते कर्मणोरिह ॥

अमावास्यायां तावत्सौमी नैव विद्यमानार्था । न ह्यमावास्यायां सोमः प्रधानदेवता । पौर्णमास्यामप्यग्निसहितस्य चोदितत्वात्केवलस्य प्रकाशनं महेन्द्राधिकरणे निराकृतम् । न चाग्नीषोमयोर्द्वयोरपि प्रयोगः 'पुरोनुवाक्यामन्वाह' इत्येककर्मणि विवक्षितैकसंख्यत्वात् । अथाप्राप्तमपि द्वित्वं विधीयते ततो मन्त्रविशेषस्य द्वित्वस्य च विधानाद्वाक्यं भिद्यते । आज्यभागयोस्तु कालकृतं व्यवस्थामात्रं सुकरमित्युक्तम् ।

---

१ (अ० ३ पा० १ अ० १२ सू० २२)। २ पौर्णमास्यधिकरण इति शेषः ।

नैकस्य यागस्य द्वाभ्यामनुवाक्याभ्यां प्रयोजनम्। उपादेयत्वेन ह्यनुवाक्या चोद्यते। तत्रैकत्वं विवक्षितम्। तेन तत्रापि न द्वे। तस्मादाज्यभागयोर्निवेश इति॥ २३॥

## [१४] आनन्तर्यमचोदना॥ २४॥ सि०

ज्योतिष्टोमे श्रूयते—मुष्टी करोति वाचं यच्छति दीक्षितमावेदयति इति। तथा हस्ताववनेनिक्ते, उलपराजिं स्तृणाति, इति। तत्र संदेहः। किं मुष्टीकरणं वाग्यमश्चाऽऽवेदनार्थमुत कृत्स्नप्रकरणे निवेश इति। तथा हस्तावनेजनं किमुलपराजिं स्तारितुमुत प्रकरणे सर्वपदार्थान्कर्तुमिति। किं तावत्प्राप्तम्। हस्तावनेजनं हस्तसंस्कारार्थं, वाग्यमः पुरुषसंस्कारार्थः। आमन्त्रयमाण एकाग्रो भवति, पदार्थाननुतिष्ठति। तेन केषां केषां पदार्थानामिमौ संस्काराविस्याकाङ्क्षाऽस्ति। सत्यामाकाङ्क्षायामानन्त-

---

तस्मात्कालार्थ एवायं संयोगोऽङ्गाङ्गिकल्पनात्।
न्याय्यः पूर्वप्रतीतत्वात्कालो हि दुरतिक्रमः॥ २३॥

(इति—वार्त्रघ्न्यादीनामाज्यभागाङ्गताधिकरणम्॥ १३॥)

---

क्रमविनियोगोऽनन्तरमवस्थितः। इदानीं तदपवादः क्रियते। मुष्ट्योः करणं वाग्यमश्च याजमानम्। आवेदनमाध्वर्यवम्। तत्र कथमङ्गाङ्गिभाव आशङ्क्यते। नैष दोषः। आध्वर्यवेष्वपि प्रयोक्तृत्वेन यजमानस्य कर्तृत्वात्। अथवा यत्तत्र दीक्षितस्याऽऽवेद्यमानं तस्याङ्गत्वेनेतरौ संदिह्येते। कस्मात्पुनस्तुल्य आनन्तर्ये पूर्वस्यैवाङ्गत्वमुच्यते न परस्य। केचिदाहुः। अनियमप्रदर्शनार्थमेव प्राथम्यात्पूर्वोपादनम्। अथवा सर्वभावनासु किमित्युपकार्यापेक्षणं प्रथममुत्पद्यते। सर्वापेक्षणेषु च पुरस्तादुच्चरितस्य ग्रन्थानुगुण्यात्पूर्वमालोचनं भवति। तेन मुष्टिकरणवाग्यमाभ्यां किं कर्तव्यमित्यपेक्षिते 'दीक्षितमावेदयति' इत्युपतिष्ठते। न च तदतिक्रमे हेतुरस्ति। शक्यते च तस्यापि परतः प्रयोजनवत्त्वं कल्पयितुम्। अतस्तदर्थत्वमेव युक्तम्। एवं हस्तावनेजनस्योलपराजिस्तरणार्थत्वम्। ऊर्ध्वैस्तृणैर्दीर्घे वेदिमध्ये स्तरणमुलपराजिस्तरणं प्रत्येतव्यम्। सर्वत्र च योग्यत्वमवान्तरप्रकरणमेकवाक्यत्वं च महाप्रकरणाद्बलीयांसि विनियोजकानि। तस्मा-

---

१ 'उलपराजिं स्तृणाति' इत्यत्रोलपराजिशब्दार्थमाह—ऊर्ध्वैरित्यादिना। उत्पूर्वस्य लुनातेः कपन्प्रत्ययान्त उलपशब्दः। उलपैः—ऊर्ध्वलवनयोग्यसुगन्ध्यादिकठिनतृणैः कृता राजिः—रेखापर्यायराज्याकारत्वमित्यर्थः।

र्येण निराकाङ्क्षीकरणम्। तस्मादानन्तर्यादावेदनार्थो वाग्यमो मुष्टीकरणं च। हस्तावनेजनं चोलपराजिं स्तरितुम्। एवं प्राप्ते ब्रूमः। सर्वैः प्रकरणाधीतैः संबन्ध इति। कुतः। वाक्यभेदात्। कथं वाक्यभेदः। अर्थद्वयस्याभिधानात्। न हि दीक्षितमावेदयितुमित्यस्मिन्नर्थ आवेदयतीति। न च स्तरितुमित्यस्मिन्नर्थे स्तृणातीति। स्तरणमपि विधीयतेऽवनेजनं च। मुष्टीकरणं वाग्यमश्च विधीयत आवेदनं च। न चैषां परस्परेण

---

त्सर्वं पूर्वसमाम्नातमुत्तरसमाम्नातस्याङ्गम्। योग्यत्वाभावात्तु मुष्टिकरणवाग्यमयोः परस्पराङ्गत्वं नोपन्यस्तम्। न ह्युभयोः प्रधानार्थयोरन्योन्यापेक्षा। तेनायोग्यमात्रमतिक्रम्य न दूरं गन्तव्यमित्येवं प्राप्ते ब्रूमः।

न तावदेकवाक्यत्वं दृश्यते योग्यता समा।
अवान्तरकथंभावस्तदानीं नावगम्यते॥

न हि द्वयोराख्यातयोः केनचिदुपबन्धेन विनैकवाक्यत्वं संभवति। यत्प्रकरणं बाधेत। योग्यता पुनरनन्तरार्थत्वे च समा। यद्वा सर्वार्थत्वे युक्ततरा। बहुषु हि पदार्थेष्ववधानमुपयुज्यतेतराम्। एकस्तु यथाकथंचिदपि क्रियते। न चावान्तरप्रकरणमिह विद्यते। यदि तावत्पूर्वस्य कथंभावस्तत उत्तरमेवाङ्गं प्राप्नोति। न चैवं भवितुमर्हति। साध्यांशस्यापरिपूर्णत्वात्। न चोत्तरेणा[1]सावक्लृप्तप्रयोजनावस्थेन शक्यः पूरयितुम्। एवं तस्याप्युत्तरेणेति यावत्प्रधानं प्राप्तम्। यद्येवं ततो योऽन्तराले गुण[2]कामस्तेन सह सर्वमाधस्त्यमङ्गं संबध्येत, नैव प्रधानं यावत्प्राप्नुयात्, अवान्तरकथंभावस्य निष्पन्नत्वादिति। उच्यते।

यदि नामास्य विज्ञातौ स्यातां वाक्यगतौ गुणौ।
अवान्तरकथंभावस्ततस्तावन्तरा भवेत्॥

प्रधानकथंभावस्त्वभितोऽन्यसंबन्धमात्रमुक्त्वा यावदन्तं गच्छतीत्यनुषङ्गाधिकरणे व्याख्यातम्। नन्वेवं सति सर्वावान्तरप्रकरणोच्छेद एव प्राप्नोति। उच्यते।

पर[3]प्रकरणस्थानामङ्गे श्रुत्यादिभिस्त्रिभिः।
ज्ञाते पुनश्च तैरेव संदंशेन तदिष्यते॥

---

१ असौ—कथंभाव इत्यर्थः। २ गुणकाम इति—'गोदोहनेन पशुकामस्य प्रणयेत्' इत्यादिवाक्यविहितो गोदोहनादिरित्यर्थः। ३ परप्रकरणस्थानां—दर्शपूर्णमासादिप्रकरणस्थानां प्रयाजादीनां, श्रुत्यादिभिस्त्रिभिः कस्मिंश्चिदङ्गे ज्ञाते, पुनश्च तैरेव प्रमाणैरपरस्मिन्नङ्गे ज्ञाते, संदंशेन—संदंशसंभवेन तदिष्यते—अवान्तरप्रकरणमिष्यते। न सर्वत्रेति कारिकार्थः।

कश्चित्संबन्धोऽस्ति। न च पदार्थाकाङ्क्षायां सत्यामानन्तर्यमेकवाक्यत्वे कारणं भवति। तस्मात्प्रकरणधर्मा एवंजातीयकाः ॥ २४ ॥

वाक्यानां च समाप्तत्वात् ॥ २५ ॥

स्वेन स्वेन पदसमूहेन परिपूर्णमेकं वाक्यम्। तथाऽपरं, तथा सर्वाणि यान्युदाहृतानि। तस्माद्विस्पष्टमर्थद्वयं, विभागे च निराकाङ्क्षता। तेन वाक्यभेदः। अतः संयोगतोऽविशेषात्प्रकरणाविशेषाच्च कृत्स्ने प्रकरणे निवेश इति ॥ २५ ॥

[१५] शेषस्तु गुणसंयुक्तः साधारणः प्रतीयेत
मिथस्तेषामसंबन्धात् ॥ २६ ॥ पू०

दर्शपूर्णमासयोः समाम्नायते—आग्नेयं चतुर्धा करोति इति। तत्र संदेहः। किमाग्नेयेऽग्नीषोमीये चैन्द्राग्ने च सर्वत्र चतुर्धाकरणं किं वाऽऽग्नेय एवेति। किं प्राप्तम्। शेषः—चतुर्धाकरणम्, आग्नेय-

---

सर्वेषां हि प्रयाजादीनामङ्गं किंचिदुक्त्वा पुनः परामर्शोऽस्तीति तत्पर्यन्तावान्तरप्रकरणकल्पना भवति। अन्यथा ह्यव्यवस्थैव स्यात्सर्वशेषाणां परस्परशेषत्वप्रसङ्गात्। यत्र पुनः संकीर्तनं नास्ति तत्र सर्वं प्रधानार्थमेवाध्यवसातव्यम्। तस्य तु किं केवलस्याथ साङ्गस्येत्यत्र विवेकं 'प्रकरणविशेषादसंयुक्तं प्रधानस्य' इत्यारभ्य वक्ष्यति। तदिह योग्यतया मुष्टिकरणादीनां साङ्गप्रधानार्थत्वं निश्चितम्। यदि त्वावेदयितुं स्तरितुमिति च श्रूयेत ततः 'तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम्' इत्येकवाक्यतया विनियोगो भवेत्। न त्वेवमस्ति। तस्मात्सर्वार्थत्वमिति ॥ २४ ॥

इतश्चाऽऽनन्तर्यमप्रमाणम्। यत एकवाक्यतालक्षणमेषु प्रत्येकं दृश्यते न सर्वेषु। तस्मादपि नान्योन्यार्थता ॥ २५ ॥

(इति—आनन्तर्यानियामकत्वाधिकरणम् ॥ १४ ॥)

---

यथासंयोगं धर्मव्यवस्थोक्ता। स तु संयोगः किमेकदेशेनापि भवत्युत समस्तेनैवेति विचारः। किं चतुर्धाकरणविधावाग्नेयशब्देन द्विदेवत्यो गृह्यते न वेति। गृह्यत इति ब्रूमः। कुतः।

शक्यते हि द्विदेवत्यः संलक्षयितुमेकया।
अग्नीषोमहविर्योगो मनोतायामिवाग्निना ॥

---

१ (अ० ३ पा० ७ अ० १ सू० १)।

मिति देवतागुणसंयुक्तः साधारणः प्रतीयते । अग्नीषोमीयेऽपि स्यादैन्द्राग्नेऽपि । कुतः । तावप्याग्नेयौ । यस्याग्निर्देवताऽन्या च भवत्यसावाग्नेयः । तद्यथा, या डित्थस्य डवित्थस्य च माता, सा डवित्थस्य भवत्येवमिहापि । यद्याग्नेयस्याग्नीषोमीयस्य च पुरोडाशस्य मिथः संबन्धो न भवेत्तत आग्नेय एव चतुर्धाकरणं व्यवतिष्ठेत । भवति तु संबन्धः । तस्मादव्यवस्था । यथा, आग्नेयस्य मस्तकं विभज्य प्राशित्रमवद्यति इति सर्वेभ्यः प्राशित्रावदानमेवं चतुर्धाकरणमपि ॥ २६ ॥

व्यवस्था वाऽर्थसंयोगाल्लिङ्गस्यार्थेन संबन्धाल्लक्षणार्था गुणश्रुतिः ॥ २७ ॥ सि०

वाशब्दः पक्षं व्यावर्तयति । व्यवतिष्ठेत वा चतुर्धाकरणमाग्नेय एव न साधारणं भवितुमर्हति । कुतः । अर्थसंयोगात् । अग्निना देवतयाऽर्थेनैकदेवत्यस्य संयोगो न द्विदेवत्यस्याग्नीषोमीयस्यैन्द्राग्नस्य चेति । कुतः । यस्य ह्यग्नीषोमौ देवता, उभयविशेषणविशिष्टः संकल्पः

---

यद्यप्यग्निरदेवता न त्वसमवेतः । समवेतत्वं चोपलक्षणकारणं न देवतात्वम् । न चात्राग्निः कार्ययोगी । येनात्यन्तमाद्रियेत । किं तर्हि । उपलक्षणार्थः । न चोपलक्षणानि यथाश्रुतान्येवोपांशुयाजान्तरालकाललक्षणार्थपुरोडाशद्वयवत्कार्येष्वाश्रीयन्ते ।

तथा पात्नीवतेऽप्युक्ता तेन त्वष्टुरतन्त्रता ।
तथा डित्थस्य मातेति माता डित्थडवित्थयोः ॥

उपलक्षणकार्ययोर्मिथः संबन्धाभावात्साधारणत्वम् । भाष्यकारेण त्वेतदेवानुषज्योक्तं मिथस्तेषामसंबन्धादचोदना स्यादिति । भवति चैवंविधानां साधारणत्वं तथा च प्राशित्रे दृश्यत इति ॥ २६ ॥

यथैव हि ग्रहत्वेन चमसा नोपलक्षिताः ।
आग्नेयत्वं तथा न स्याद्द्विदेवत्योपलक्षणम् ॥

उद्दिश्यमानं तावद्विवक्षितमित्युक्तम् । न चाग्नीषोमीयैन्द्राग्नयोराग्नेयत्वमस्ति । न ह्यत्राग्निसत्तामात्रमुपलक्षणम् । किं तर्हि । तद्धितोपात्तं देवतात्वम् । अग्निः पुनस्तद्विशेषणम् । यां चोद्दिश्य द्रव्यं त्यज्यते सा देवता । न च द्विदेवत्योऽग्निमुद्दिश्य त्यज्यते ।

न हि व्यासक्तिविज्ञानमेकेन व्यपदिश्यते ।
नाग्नीषोमीय आग्नेय ऐन्द्राग्नो वा तदुच्यते ॥

क्रियते । तस्याग्निः सोममपेक्षमाणो देवता न निरपेक्षः । यस्य चाग्निः सोममपेक्षमाणो देवता, न तस्मात्तद्धित उत्पद्यते । समर्थानां हि स उच्यते । सापेक्षं चासमर्थम् । तस्मान्न तद्धितान्तेन निरपेक्षाग्निदेवत्येन द्विदेवत्यस्याभिधानम् । अतो यत्र निरपेक्षोऽग्निर्देवता, तत्रैव चतुर्धाकरणमिति । देवतालिङ्गस्य हि सामर्थ्येन संयोगो भवति तद्धितार्थस्य, नासति सामर्थ्ये ।

अथ यदुक्तं यथा प्राशित्रावदानं सर्वेभ्यः क्रियत एवं चतुर्धाकरणमपीति । युक्तं प्राशित्रावदाने । न तत्रैवं संबन्धः क्रियते, आग्नेयस्य प्राशित्रमवद्यतीति । कथं तर्हि । आग्नेयस्य मस्तकं विभज्येति । एकं ह्येतद्वाक्यं प्राशित्रमवद्यतीति । द्वितीयमाग्नेयस्य मस्तकं विभ-

---

तद्धितार्थोऽत्र लिङ्गं हि समर्थानां च तद्धितः ।
असमर्थात्समासस्थान्न चाग्नेरस्ति तद्धितः ॥

आग्नेय इति यो निरपेक्षाग्निदेवत्यः सोऽभिधीयते । न च द्विदेवत्ये निरपेक्षोऽग्निर्देवता । तेनायं तद्धितो नाग्नीषोमादिगताग्निशब्दादुत्पद्यत इति न तदर्थस्य देवतत्वमाह । यत्र त्वसौ निरपेक्षो देवता स शक्य आग्नेय इति वक्तुम् । यत्तु प्राशित्रवदिति । तत्रोच्यते । देशविशेषलक्षणार्थोऽस्मिन्नाग्नेयगुणश्रुतिः । सामान्यवाक्येन सर्वत्र प्राशित्रावदाने प्राप्ते मस्तकविरोगविशेषविधानार्थमेतद्वचनमिति वैषम्यम् ।

स्थितेऽधिकरणे त्वेवं प्रत्यवस्थीयते पुनः ।
अविशेषादुभौ वेति कातीयवचनश्रुतेः ॥
उक्तं कात्यायनेनेह दृष्ट्वा शातपथीं श्रुतिम् ॥

तं चतुर्धा कृत्वा पुरोडाशं बर्हिषदं करोति इति ।

अत्रोच्यते ।

सत्यमस्ति श्रुतिर्येयमविशेषेण दृश्यते ।
विशेषे स्थाप्यते सा तु नित्यं शाखान्तरीयया ॥

प्राशित्रेऽपि तथेति चेत् । न । गुणार्थत्वात् । मस्तकं विरुज्येति गुणपरत्वादशक्यः सामान्यविधिरुपसंहर्तुम् । इदं तु निर्गुणं पुनर्वचनं शक्नोति सामान्यं स्वविषये स्थापयितुम् । दूरस्थत्वादशक्योऽस्योपसंहार इति चेत् । न । यस्य येनार्थसंबन्ध इति न्यायात् । तेन—

---

१ यस्य येनार्थसंबन्धो दूरस्थेनापि तस्य सः । अर्थतो ह्यसमर्थानामानन्तर्यमकारणम् । इति श्लोकपूरणम् ।

ज्योति। तत्राऽऽग्नेयस्य मस्तकादवद्यतीति गम्यते। अन्यस्य मस्तकादन्यस्माद्वेत्यनियमः। यदि तु तत्र केवलाग्निदेवत्यो नाभविष्यत्, तदाऽऽनर्थक्यपरिहाराय द्विदेवत्योऽप्यग्रहीष्यत। यत्तु डित्थस्य मातेति। युक्तं तत्र। अव्यासङ्गि मातृत्वम्। ततो जातो डित्थः। एतावता संबन्धेन, मातेत्युच्यते। नात्र किंचिदपेक्ष्यते। स च तावांस्तत्र संबन्धोऽस्तीति डित्थस्य मातेति युक्तं वचनम्॥ २७॥

इति श्रीशबरस्वामिकृतौ मीमांसाभाष्ये तृतीयस्याध्यायस्य प्रथमः पादः॥

====

अथ तृतीयेऽध्याये द्वितीयः पादः॥

## [ १ ] अर्थाभिधानसामर्थ्यान्मन्त्रेषु शेषभावः स्यात्तस्मादुत्पत्तिसंबन्धोऽर्थेन नित्यसंयोगात्॥ १॥ सि०

इह मन्त्रा उदाहरणं बर्हिर्देवसदनं दामि, इत्येवमादयः। किं मुख्य

---

अवश्यमेव सामान्यं विशेषं प्रति गच्छति।
गतमात्रं च तत्तेन विशेषे स्थाप्यते ध्रुवम्॥

अथवा विशेषेण प्राप्तत्वात्सामान्यमनूद्यते बर्हिषस्त्वकरणविधानार्थम्। अथ तदपि प्राप्तं ततः क्रमार्थं श्रवणमिति वक्तव्यम्। अतश्चाऽऽग्नेयस्यैव चतुर्धाकरणमिति सिद्धम्। यदि तु तत्र केवलाग्निदेवत्यो नाभविष्यादिति— लक्षणार्था गुणश्रुतिरित्येतस्यैव व्याख्या। केवलदेवत्याभावे हि मनोतायामिवाग्निशब्द उभौ लक्षयेत्। तदर्था वा गुणश्रुतिर्भवेत्। अस्ति त्वेकदेवत्यस्तस्मात्तस्यैव चतुर्धाकरणम्। यद्यपि चोपलक्षणं कार्ययोगि न भवति तथाऽपि तेनानुपलक्षितं न शक्यं ग्रहीतुमित्येकदेवत्यस्यैव ग्रहणमिति सिद्धम्॥ २७॥

( इति—चतुर्धाकरणाधिकरणम्॥ १९॥ )

———

इति श्रीभट्टकुमारिलविरचिते मीमांसाभाष्यव्याख्याने तन्त्रवार्तिके तृतीयस्याध्यायस्य प्रथमः पादः समाप्तः॥

———

इदानीं लिङ्गविनियोगः स्तूयते। लिङ्गं नाम मन्त्राणामर्थप्रत्यायनसामर्थ्यम्। तच्च

एवाभिधेये मन्त्राणां विनियोग उत गौणेऽपीति। कः पुनर्मुख्यः को वा गौण इति। उच्यते। यः शब्दादेवावगम्यते, स प्रथमोऽर्थो मुख्यः। मुखमिव भवतीति मुख्य इत्युच्यते। यस्तु खलु प्रतीतादर्थात्केनचित्संबधेन गम्यते, स पश्चाद्भावाज्जघनमिव भवतीति जघन्यः। गुणसंबन्धाच्च गौण इति। यद्येवं सर्व एव मुख्यः। सर्वो हि शब्दाद्गम्यते। यथैव ह्यग्निर्ज्वलतीत्युक्ते ज्वलनसंप्रत्ययः। एवमेवाग्निर्माणवक इति शब्द एवोच्चारिते माणवके संप्रत्ययः। अथोच्येत। यस्मिन्निरुपपदाच्छब्दात्संप्रत्ययः स मुख्यः, यस्मिन्सोपपदात्स गौण इति। नैतद्युक्तम्। यस्य हि शब्दस्य रूपं कस्यचिदर्थस्य निमित्तं, सोपपदस्यापि तदेव रूपं, निरुपपदस्यापि। न च शक्यं निमित्ते सति

---

मुख्ये गौणे च केनाचित्प्रकारेण विद्यते। तत्र विनियोगः किं मुख्य एवार्थे भवत्युत गौणेऽपीति संदेहे नैव गौणो नाम कश्चिदस्तीति मन्वान आह—कः पुनर्मुख्यः को वा गौण इति। तत्सिद्धिसूत्रे[1] तु सिद्धे गौणे तन्निमित्तभेदः स्वार्थापरित्यागवृत्तित्वं च व्याख्यातमित्ययमर्थाद्विचारः पूर्वं प्रत्येतव्यः। तत्र च।

शब्दार्थस्यैव मुख्यत्वं मुखवत्प्रथमोद्गतेः।
अर्थगम्यस्य गौणत्वं गुणागमनहेतुकम्॥
शाखादिभ्यो य इत्येवमिवार्थे मुख्य इत्ययम्।
शब्दः शब्दाभिधेयत्वात्सर्वेष्वेव प्रसज्यते॥

परगुणानां परत्राभावादवश्यं गुणेभ्य आयात इत्येवंलक्षणं गौणत्वमित्यतः सर्व एव शब्द उच्चरितेऽभिधीयमानत्वादनन्यगतिः शब्दशक्तिकल्पनां कुर्वन्नर्थान्तरेणाव्यवहितत्वात्प्रथममेव मुखमिव भवतीति मुख्यः। तत्र परपरिकल्पितानि तावद्गौणत्वकारणान्युपन्यस्यन्नाह—अथोच्येत। यस्मिन्निरुपपदादित्यादि।

सर्वथा लक्षणं नाम यद्व्यवच्छेदकारणम्।
पराधीनप्रवृत्तिश्च[2] गौणो नित्यं प्रतीयते॥

न हि यथा केवलादग्निशब्दाज्ज्वलनप्रत्ययो भवत्येवं माणवकप्रत्ययः। पदान्तराधीनत्वात्। यत्रापि पदान्तरं न श्रूयते तत्राप्यर्थप्रकरणादिलभ्यं तदेव व्याप्रियत इत्यव्यभिचारः। तदेव च सामान्यं नाम प्रवृत्तिहेतुर्गुण इति। नैतदेवम्। कुतः।

---

१ पा० सू० (५-३-१०३)। २ पराधीना शब्दप्रवृत्तिर्यस्मिन्नर्थे स गौण इत्यर्थः।

नैमित्तिकेन न भवितुम्। किमतः। यद्येवम्, इदं न शक्यते वदितुमु-पपदादृते न सोऽर्थो भवति, उपपदे तु संजाते सोऽर्थः संजनिष्यत इति। न चासौ समुदायार्थः शक्यते विज्ञातुम्। अन्वयव्यतिरेकाभ्यां हि विभागोऽवगम्यते। अथ वाक्यार्थोऽयमित्युच्यते। नैवं शक्यम्। न ह्यनन्वितः पदार्थो भवति वाक्यार्थः। तदेवं दृश्यताम्। अग्निशब्द एवायं ज्वलनवचनः। अग्निशब्द एव माणवकस्याभिधातेति। तस्मान्न गौणो मुख्य इति कश्चिद्विशेषः।

---

शब्दार्थस्यैव साहित्यादभिव्यक्तिरियं कृता।
अन्यस्य द्योतकत्वात्तु नापेतं मुख्यलक्षणम्॥

यथैव चक्षुषः प्रकाशानुग्रहापेक्षित्वेऽपि[1] रूपमर्थो, यथा वा मुक्तसंशयस्य मुख्यस्य वर्णक्रममात्राग्रहणसंस्कारस्मृतिसंबन्धानुभवाद्यपेक्षित्वं तथाऽत्रोपपदमपि नैव विना सामर्थ्यं नामापेक्षितुं शक्यते। अपेक्ष्यमाणमपि च द्योतकत्वेनेतिकर्तव्यतास्थानीयत्वान्न मुख्यतां विहन्ति। तेन विनाऽप्युपपदेन स तस्यार्थो भवत्येव। कथंचित्तु नाभिव्यज्यते। तद्यथा गवादिशब्दानां पृथिव्यादिः। अथोपपदस्यं द्योतकत्वं परित्यज्य तुल्यकल्पतोच्यते। यस्मान्नित्यं माणवकाग्निशब्दसमुदायादस्यार्थस्य प्रतीतिरतोऽश्वकर्णादिवत्समुदायवाच्यत्वे सत्यवयवस्य गौणत्वमिति। तदुच्यते।

न चासौ समुदायार्थः शक्यो वक्तुमिह त्वया।
अन्वयव्यतिरेकाभ्यामर्थभेदो हि दृश्यते॥

तत्र समुदायप्रसिद्धिर्भवति यत्रावयवार्थौ तिरोधाय त्यक्तभेदः समुदाय एव प्रतीयते। गम्यते त्वत्राग्निशब्दस्य पैङ्गल्यं माणवकशब्दस्य च पिण्डस्वरूपं विविक्तं वाच्यम्। अत उभावपि प्रात्यात्मिकयोरपि वाचकत्वान्मुख्याविति। इदानीमवयवानुसारेणैव समुदायार्थत्वं समर्थयमान आह—अनुगतस्वार्थपदद्वयगम्यत्वान्नीलोत्पलवद्वाक्यार्थः। अतश्च तस्य पदार्थप्रत्याय्यत्वाच्छब्दं प्रति पूर्ववदेव गौणत्वमिति। तन्निराकरोति।

अग्निमाणवकत्वाभ्यां यद्येकोऽर्थो विशेषितः।
नीलोत्पलवदिष्येत ततो वाक्यार्थता भवेत्॥

न त्वत्र तदीयो मुख्यार्थोऽग्नित्वमस्ति। न च भवतः पैङ्गल्यं वाच्यम्। अस्मत्पक्षाभेदप्रसङ्गात्। तस्मान्न वाक्यार्थः। तेन ज्वलने माणवकस्य च पैङ्गल्ये तुल्यवच्छब्दप्रवृत्तिरिति मुख्यत्वम्। माणवकस्येति भाष्ये पैङ्गल्यव्यतिरेकजनिता षष्ठी। नाभिधातृव्यतिरेक-

---

१ प्रकाशापेक्षितत्वेऽपीति पा०।

अथोच्यते, यः सुष्ठु प्रसिद्धः स मुख्यः, यो मनागिव स गौण इति। इदमपि नोपपद्यते । प्रसिद्धिर्नाम प्रज्ञानम् । न च प्रज्ञाने कश्चिद्विशेषोऽस्ति । अथोच्येत । यस्य बहुशः प्रयोगोऽस्ति स मुख्यः। अल्पशः प्रयुज्यमानो गौण इति। नैतदेवम्। अल्पशोऽपि प्रयुज्यमानो नासति सामर्थ्ये प्रत्याययेत्। अतः सोऽपि शब्दात्प्रतीयत इति मुख्य एव। अत्रोच्यते। अस्त्यत्र विशेषः । माणवको नाग्निशब्दात्प्रतीयते । कथमवगम्यते। उक्तम्, अन्यायश्चानेकार्थत्वमिति । कथं न विपर्ययः । उच्यते । अनादृत्यैव माणवकप्रत्ययं ज्वलनमग्निशब्दात्प्रतियन्तो दृश्यन्ते । न त्वनादृत्य ज्वलनप्रत्ययं माणवकमग्निशब्दात्प्रतियन्ति । कुत एतत् । यो योऽग्निसदृशो विवक्ष्यते, तत्र तत्राग्निशब्दो नियत इति । अत एव विगतसादृश्याद[1]यं तु दृश्यते । अतोऽग्निसादृश्यमस्य प्रवृत्तौ निमित्तम्। न च ज्वलनेऽप्रतीते तत्सादृश्यं प्रतीयते । तस्माज्ज्वलनस्याग्निशब्दो निमित्तं, न माणवकस्य । तस्माज्ज्वलने मुख्यो न माणवके ।

---

जानिता । न हि माणवकस्वरूपमग्निशब्दाद्गम्यते । न हि पर्यायत्वे माणवकशब्दः प्रयुज्येत । अथोच्येत यः सुष्ठु प्रसिद्ध इति मुक्त्वोपपदव्यापारं यत्कृतं तस्याऽऽश्रयणमनाश्रयणं च ते एव मन्दसुष्ठुप्रसिद्धी गौणमुख्यविभागाय दर्शयति । तत्रोत्तरम् ।

प्रसिद्धिरिति विज्ञानं न चास्योनातिरिक्तते ।
तस्मान्न तत्कृतः शक्यो विशेषो वक्तुमञ्जसा ॥

इदानीं श्रोतृगतप्रसिद्धिभेदमूलं वक्तृगतं बह्वल्पप्रयोगित्वं विभागार्थं दर्शयति । यस्य च बहुशः प्रयोग इत्यादि । तन्निराक्रियते ।

अल्पशोऽपि प्रयुक्तस्य सकृच्छक्तिर्निरूपिता ।
न निवर्तत इत्येवमुभयोस्तुल्यता पुनः ॥

इहापि च गोशब्दस्य पृथिव्यादौ मन्दसुष्ठुप्रसिद्धिप्रयोगौ दर्शयितव्यौ । तथा चाऽऽहुः ।

मण्डकैर्बहुशस्तृप्तिः कदाचित्खण्डमोदकैः ।
न चात्र मण्डका मुख्या गौणा वा खण्डमोदकाः ॥

इदानीं विशेषं कथयति । सत्यपि तावन्माणवकसामानाधिकरण्येऽरुणाशब्दन्यायेन, सति सादृश्येऽभिधानादसति चानभिधानादन्यत्रासादृश्यवति वृत्तिदर्शनादसति चादर्शनाद्विशेषणत्वादवश्यंभाविप्रथमप्रत्यायने सादृश्यमेव प्रथमं प्रत्याययितव्यम् । न चानवग-

---

१ विगतसादृश्यवति तु—इत्ययं पाठो भवितुमुचितं इति भाति ।

एवमेव तृणप्रत्ययस्य बर्हिःशब्दो निमित्तं, न तृणसदृशप्रत्ययस्य। तदेवं द्वैते सति मुख्यपरता शब्दस्य, उत गौणपरताऽपीति युक्तो विचारः। किं तावत्प्राप्तम्। मुख्ये गौणे च विनियोगः। कुतः। उभयस्य शक्यत्वादुभयमपि बर्हिःशब्देन शक्यते प्रत्यायथितुं तृणं च तृणसदृशं च। तृणं साक्षात्, तृणसदृशं तृणप्रत्ययेन। यच्च नाम दर्शपूर्णमासयोः साधनभूतेन बर्हिःशब्देन शक्यते प्रत्याययितुं तत्सर्वं प्रत्याययितव्यम्। विनिगमनायां हेत्वभावात्। अपि चैवमाश्रीयमाणे पूषाद्यनुमन्त्रणादीनि दर्शपूर्णमासाभ्यां नोत्कृष्यन्ते। तत्रैव गौणेनाभिधानेन प्रकृतां देवतामभिवदिष्यन्ति।

एवं प्राप्ते ब्रूमः। मुख्य एव विनियोक्तव्यो मन्त्रो न गौण इति। कुतः। उभयाशक्यत्वात्। प्रकरणे हि समाम्नानात्प्रधानेनैकवाक्यतामुपैति। तत्रैतदापतति, यच्छक्नुयादनेन मन्त्रेण साधयितुं तथा साधयेदिति। स चासावर्थाभिधानसंयोगाच्छक्नोत्युपकर्तुं न गौण-

---

तेऽग्नौ तत्प्रतीयत इति प्रथमतरमग्नेरभिधानम्। ततश्च तत्संबन्धादेव शेषप्रतीतेर्व्यक्तिवदनभिधेयत्वम्। सन्ति चैवमादिषु कानिचिद्रूपादिसामान्यानीत्युक्तम्। तस्मादस्ति गौणमुख्यविभाग इत्यारभ्यमधिकरणम्। एते च तत्सिद्धिसूत्रोक्तैः सह नव गौणपक्षा द्रष्टव्याः।

जहत्स्वार्थाभिधायित्वं संघातः परिकल्पना।
तथा सोपपदा वृत्तिः समुदायप्रसिद्धिता॥
वाक्यार्थोऽल्पप्रसिद्धित्वमेवमल्पप्रयोगिता।
अष्टावेतान्निराकृत्य साधिता गुणलक्षणा॥
तत्र नित्यं परार्थत्वादुभयत्र प्रयोगिता।
साक्षान्न ह्यभिधानस्य किंचिदभ्यधिकं फलम्॥

एवं च सति गौण्या वृत्त्या पूषादिशब्दैरग्न्याद्यभिधानादनुत्कर्षो भविष्यति। अन्यथा यत्र पूषादयस्तत्र नीयेरन्। तथाऽग्न्यादिशब्दैः सूर्याद्यभिधानादविकारे सत्यार्षचोदकोऽनुग्रहीष्यते। इत्येवं प्राप्ते ब्रूमः।

अर्थाभिधानसंयोगान्मन्त्राणां क्रतुशेषता।
मुख्येन च कृतार्थानां न गौणे श्रुतिकल्पना॥

---

१ शेषप्रतीतेः–अवशिष्टार्थप्रतीतेरित्यर्थः। २ व्यक्तिवदिति–आकृत्यधिकरणन्यायेनेत्यर्थः।

मर्थं शक्नोत्यभिधातुम् । तस्मान्न गौणे विनियोगः ।

ननु मुख्यप्रत्ययाच्छक्यते गौणः प्रत्याययितुम् । सत्यमेतत् । मुख्यप्रत्यायनेनैवास्य प्रयोजनवत्ता निर्वृत्तेति न गौणं प्रति विनियोगे किंचित्प्रमाणमस्ति । मुख्ये विनियोगेन त्वानर्थक्यं परिह्रियते । परिहृत आनर्थक्ये न गौणाभिधानमापतति । न ह्यनभिधाय मुख्यं, गौणमभिवदति शब्दः । अतः प्रमाणाभावान्न गौणे विनियुज्येत । अपि च । गौणस्य प्रत्यायने सामर्थ्याद्बहवोऽभ्युपायाः प्राप्नुवन्ति । सामर्थ्यं च शब्दैकदेश इत्युक्तम्, अर्थाद्वा कल्पनैकदेशत्वादिति । तत्र मन्त्रे नियोगतो गौणं प्रति विनियुज्यमान उपायान्तरं, विना प्रमाणेन बाध्येत । मन्त्राम्नानं प्रमाणमिति चेत् । न । तस्योपायान्तरानिवृत्तौ सामर्थ्यमस्ति । ननु मुख्येऽपि विनियुज्यमानस्यैष एव दोषः । नेत्युच्यते । यदि मुख्येऽपि न विनियुज्येत नैव प्रधानस्योपकुर्यात् । तत्र चास्योत्पत्तिरनर्थिकैव स्यात् । तस्मादस्ति गौणे मुख्ये च विशेषः । अपि च । यो गौणे मन्त्रं विनियुङ्क्ते स वक्तव्यः—किमर्थं मुख्यं प्रत्याययसीति । स चेद्ब्रूयाद्, नान्यथा गौणप्रत्ययोऽस्तीति । प्रतिब्रूयादेनमन्येऽपि गौणप्रत्ययस्याभ्युपायाः सन्तीति । अथ स एवमभियुक्तः प्रतिब्रूयात्— मुख्यप्रत्ययोऽपि

---

'अपि वा[1] प्रयोगसामर्थ्यात्' इत्यनेन हि न्यायेनाभिधेये तावद्विनियोगाय मन्त्राः श्रुतिं परिकल्पयन्ति । तत्र यदि जहत्स्वार्था गौणी वृत्तिर्भवेत्ततस्तुल्यवदुभयत्रापि श्रुतिः कल्प्येत । यदि तु गौणमपि वदता पूर्वतरं स्वार्थोऽभिधेयस्तदा तदतिक्रमकारणाभावात्तद्विनियोगश्रुतौ कल्पितायां निराकाङ्क्षेषु मन्त्रप्रकरणस्वाध्यायाध्ययनविधिषु न पुनः श्रुतिकल्पनहेतुरस्तीति न विनियोगः । किं च[2] ।

कृतार्थे मन्त्रपाठे च गौणानां स्मारकान्तरम् ।
अनिवारितसामर्थ्यप्राप्तं किमिति बाध्यते ॥

अपि च ।

मुख्यः प्रत्याय्यते कस्माद्गौणेऽप्यर्थे विवक्षिते ।
अन्यथानुपपत्त्या चेन्न ध्यानाद्युपपत्तितः ॥

---

१ (अ० १ पा० ४ अ० १४ सू० २५)। २ (अ० २ पा० १ अ० ६ सू० ३१)। ३ 'अपि च गौणस्येत्यादि—मुख्ये च विशेषः' इत्यन्तं भाष्यं व्याचष्टे—किं चेत्यादिना बाध्यतेन्तेन ।

पाक्षिकोऽभ्युपाय इति । ब्रूयादेनं—न तर्हि नियोगतो गौणे विनियोजनीयः । यदा गौणप्रत्ययाय मुख्यमुपादत्ते, तदैतदापतितं भवति मुख्य एव विनियोग इति । अर्थेन च प्रतीतेन प्रयोजनं, न प्रत्यायकेन मन्त्रेण । अतोऽन्येनाप्युपायेन गौणः प्रत्याययितव्यः । न स एव मन्त्र आदर्तव्यः । अथापि मन्त्रेण प्रत्यायकेन प्रयोजनं स्यात्तथाऽपि मुख्यप्रत्ययनेनैव निर्वृत्तं प्रयोजनमिति नतरां गौणे विनियुज्येत । तस्मान्मुख्यगौणयोर्मुख्ये कार्यसंप्रत्यय इति सिद्धम् ॥ १ ॥

संस्कारकत्वादचोदिते न स्यात् ॥ २ ॥

अथ यदुक्तं—पूषाद्यनुमन्त्रणादीनामुत्कर्षो न भविष्यतीति । युक्तस्तेषामुत्कर्षः । संस्कारको हि मन्त्रः । सोऽसति संस्कार्येऽनर्थक इति यत्रार्थवांस्तत्र नाययिष्यते । न च कश्चिद्दोषो भविष्यति ॥ २ ॥

---

पाक्षिकत्वेऽप्यनित्यत्वात्पक्षेऽनर्थकता भवेत् ।
नित्यं मुख्यापरित्यागान्मत्पक्षश्चाऽऽश्रितो भवेत् ॥
न चार्थप्रत्यये सिद्धे मन्त्रः कार्योऽभिधायकः ।
मन्त्राम्नानार्थवत्त्वं च मुख्येनार्थेन सेत्स्यति ॥

तेनैष सूत्रार्थः । यस्मादर्थाभिधानसंयोगान्मन्त्रेषु शेषभावस्तस्मादौत्पत्तिकेनैवार्थेनैषां संयोगः स्यात् । कुतः । तेनैवाव्यभिचारितया नित्यसंयोगात् ॥ १ ॥

अचोदिते—पूषादौ, दर्शपूर्णमासयोर्थन्मन्त्रा न विनियुज्यन्ते युक्तमेव तत् । संस्कारस्य संस्कार्यपरत्वाल्लिङ्गेन च प्रकरणबाधात् । कथं पुनरेषामुत्कृष्टानां वैदिकैः कर्मभिर्योगः । कथं वा क्रत्वङ्गसामान्यविनियोगमन्तरेण लिङ्गं देवतायामेव केवलायां विनियोजकमिति । तदुच्यते ।

यागानुमन्त्रणानीति समाख्या क्रतुयोजिनी ।
तस्माच्छक्त्यनुरोधेन प्राप्तिस्तद्देवते क्रतौ ॥

यागानुमन्त्रणसमाख्या ह्येषां यागसंबन्धादृतेऽनुपपद्यमाना यागसामान्याङ्गत्वं गमयति ।

अतो विशेषचिन्तायामशक्येष्वनियोजनात् ।
शक्यार्थविनियोगाय लिङ्गव्यापारसंभवः ॥ २ ॥

( इति—मन्त्राणां मुख्यार्थविनियोगाधिकरणम् ॥ १ ॥ )

## [ २ ] वचनात्त्वयथार्थमैन्द्री स्यात् ॥ ३ ॥ सि०

अग्नौ श्रूयते—निवेशनः संगमनो वसूनामित्यैन्द्र्या गार्हपत्यमुपतिष्ठत इति। तत्र संदेहः। किमिन्द्रस्योपस्थानं कर्तव्यमुत गार्हपत्यस्येति। कुतः पुनर्गार्हपत्यमुपतिष्ठत इत्येवं विस्पष्टे वचने संशय इति। उच्यते। यद्धि वाक्येनोपस्थानं तत्स्तुतिवचनेन संस्करणं न समीपस्थानमात्रम्। न चैन्द्रेण मन्त्रेणाग्नेरभिधानं शक्यते कर्तुम्। अतो गार्हपत्यमुपतिष्ठत इति न गार्हपत्यार्थमुपस्थानमेतादिति जायेत शङ्का। गार्हपत्य उपस्थानार्थो भवेदिति। तादृशश्च शब्दो नास्ति तृतीयान्तः सप्तम्यन्तो वा। तस्माद्विचारः कथमुपपन्नं भवतीति। किं तावत्प्राप्तम्। सामर्थ्यादिन्द्रोपस्थानम्। अशक्यत्वाच्च गार्हपत्योपस्थानस्य। कथं द्वितीयाविभक्तिरिति चेत्। अविवक्षितेप्सितार्था वा संबन्धमात्रप्रधाना[1]।

---

अपवाद आरभ्यते। निवेशनः संगमनो वसूनामित्यैन्द्र्या गार्हपत्यमुपतिष्ठत इति। यद्यपि मन्त्रार्थोऽग्नावप्युपपद्यते तथाऽपि तद्धितश्रुत्यैवेन्द्राभिधानसामर्थ्यमत्र मुख्यमिति विज्ञायते[2]। केषांचित्तु 'कदाचन स्तरीरसि' इत्येषा ऋक् पठ्यते। तत्र पूर्ववदेव संदेहः, किं मुख्यत्वादिन्द्रोऽभिधातव्य उत वचनसामर्थ्याद्गौणो गार्हपत्य इति। सत्यपि च संयुक्तश्रवणेऽरुणावदशक्तेः संदेहो योजनीयः। तत्र द्रव्यपरिच्छेदद्वाराऽपि क्रयसंबन्धो लब्धः। इह तु शब्दार्थसंबन्धस्यौत्पत्तिकत्वेनाशास्त्रहेतुत्वादत्यन्ताशक्तत्वम्। न हि कथंचिदिन्द्रशब्दो गार्हपत्यं ब्रवीति। अभिधानं चेदं चोदितम्। उपतिष्ठत इत्यात्मनेपदनिर्देशात्। मन्त्रकरणव्यापाराभिधाने ह्येतत्। न चाभिधानं मुक्त्वाऽन्यत्र मन्त्रः करणं भवति। तेन 'ऐन्द्र्योपतिष्ठते' इत्येतावता तावदिन्द्रोपस्थानं विज्ञायते। गार्हपत्यमिति च द्वितीययाऽग्नेः प्रकाश्यत्वम्। तत्र किं समञ्जसं किमसमञ्जसमिति जायते संशयः। न ह्यिन्द्रोपस्थान एव साधनान्तरं गार्हपत्यो ज्ञायते। किं प्राप्तम्। पूर्वाधिकरणेनेन्द्रोपस्थानमिति। कथं द्वितीयेति चेत्। सक्तुवत्साधनान्तरमधिकरणापादानादि लक्षयिष्यति। शक्नोति विरोधादीप्सिततमत्वमविवक्ष्यमाणं कारकमात्रं लक्षयितुम्। तत्र च 'द्रव्याणां कर्मसंयोगे' इत्यनेन गार्हपत्यस्याङ्गत्वं

---

१ संबन्धमात्रप्रधाना—कारकमात्रप्रधानेत्यर्थः। वाशब्दस्तु यद्वेति पक्षान्तरविकल्पार्थः।

२ विज्ञायत इति—इति कृत्वा भाष्यकृदुदाहरणं युक्तमित्यध्याहारः। ३ (अ० ६ पा० १ अ० १ सू० १)।

यद्वोपस्थानविशेषणं संबन्धाद्गार्हपत्यशब्दः । तस्माद्गार्हपत्यविशिष्टमुपस्थानमिन्द्रार्थं कर्तव्यमिति। गार्हपत्यश्च देशेन विशिंष्यान्मुख्यमेव कार्यं मन्त्राणाम्। एवं प्राप्ते ब्रूमः। वचनात्त्वयथार्थमैन्द्री स्यात्। नैतदस्तीन्द्रार्थमुपस्थानमिति। अयथार्थमैन्द्री स्यात्। कुतः। वचनसामर्थ्यात्। वचनमिदं भवति, ऐन्द्र्या गार्हपत्यमुपतिष्ठत इति। गार्हपत्ये द्वितीया विभक्तिः प्राधान्यमाह। किमिव वचनं न कुर्यात्।

---

भविष्यति। यद्वोपस्थानविशेषणं संबन्धाद्गार्हपत्यशब्द इन्द्रलक्षणार्थ इति केचित्। एतदुक्तं भवति। विभक्तिर्वा लक्षणावृत्ता प्रातिपदिकं श्रुतिवृत्तम्। प्रातिपदिकं वा यज्ञसाधनसाधर्म्याल्लक्षणार्थं द्वितीया मुख्येति। अथवोपस्थानविशेषणमित्यत्र धात्वर्थमात्रमुक्तम्। एककर्मविषयत्वं हि गार्हपत्यमन्त्रयोर्विप्रतिषिद्धम्। [2]यस्य मन्त्रः करणं न तस्य गार्हपत्यः कर्म। [3]यस्यासौ कर्म न तस्य मन्त्रः करणम्। द्वौ चेह प्रकृतिप्रत्ययसमूहेन व्यापारावुपात्तौ। प्रकृत्या समीपस्थानं प्रत्ययेन प्रकाशनम्। तत्र प्रक[4]ाशने यादृशं गार्हपत्यस्य कारकत्वं तादृशं व्याख्यातम्। इदानीं मुख्यमेव कर्मत्वं प्रकृत्यर्थं प्रत्युच्यते। तेनैतदुक्तं भवति। गार्हपत्यं समासीदन्निन्द्रं प्रकाशयेदिति। यद्यपि च प्रत्ययार्थप्राधान्यात्तत्कर्मत्वं युक्तं तथाऽप्ययोग्यत्वांत्ततो निवृत्तं संबन्धात्प्रकृत्यर्थमुपसंक्रामति। तस्मान्मुख्यमेव कार्यं मन्त्राणामित्येवं प्राप्ते ब्रूमः। वचनादयथार्थत्वं मन्त्राणामिति। कुतः।

गौणत्वं यत्र नाम स्यात्क्वचिद्ब्राह्मणमन्त्रयोः।
तत्रानुवादरूपत्वान्मन्त्राणां गौणतेष्यते॥

गार्हपत्यस्तावद्द्वितीयया प्रधानस्य प्रत्ययार्थस्य कर्मेति श्रुत्या गम्यते। तेनैन्द्र्या स प्रकाशयितव्यः। तत्र यद्ययथार्थत्वं वचनानुरोधेन संजातं तथा नामेत्यध्यवसातव्यम्। अवश्यं भावि ह्यत्र ब्राह्मणस्य मन्त्रस्य वा गौणत्वं। तत्र ब्राह्मणस्यात्यन्ताप्राप्तविधित्वात्प्रथमप्रवृत्तेश्चानन्यप्रमाणकेऽर्थे गौणत्वमयुक्तम्।

मन्त्रस्य तु ब्राह्मणचोदितार्थप्रकाशनात्तत्परतन्त्रवृत्तेः।
विरोधिनं स्वार्थमतीत्य मुख्यं युक्तो हि गौणार्थनिमित्तभावः॥

---

१ संबन्धादिति--स्वशक्यवृत्तियज्ञसाधनत्वाख्यात्, गृहपतेः--यजमानस्यायमित्यवयवयोगाख्याद्वा गार्हपत्यप्रातिपदिकमिन्द्रपरं सदुपस्थानविशेषणमित्यर्थः। २ यस्य--प्रकाशनस्येत्यर्थः। ३ यस्यासौ--समीपस्थितेर्गार्हपत्य इत्यर्थः। ४ प्रकाशने--समीपस्थितिविशिष्टप्रकाशन इत्यर्थः।

नास्ति वचनस्यातिभारः । तस्माद्गार्हपत्यार्थमुपस्थानम् ॥ ३ ॥

**गुणाद्वाऽप्यभिधानं स्यात्संबन्धस्याशास्त्रहेतुत्वात् ॥ ४ ॥**

अत्राऽऽह । नन्वेतदुक्तं—ऐन्द्रेण मन्त्रेण गार्हपत्योपस्थानं भविष्यतीति । उच्यते । वचनाद्भविष्यति । आह । न वचनशतेनापि शक्यमेतत् । इन्द्रशब्देनाग्निं प्रत्याययेदिति ब्रुवन्विहन्येत । यथाऽग्निना सिञ्चेदुदकेन दीपयेदिति । न हि शास्त्रहेतुकः शब्दार्थयोः संबन्धो भवति । नित्योऽसौ लोकतोऽवगम्यत इत्युक्तम् । औत्पत्तिकस्तु शब्दस्यार्थेन संबन्ध इति । ननु शब्दलक्षणोऽपि भवति शब्दार्थयोः संबन्धः कृत्रिमः । यथा देवदत्तो यज्ञदत्त इति । भवति कश्चिदत्र संबन्धस्य विधायकं वाक्यं भवति, न त्वेतद्वाक्यं शब्दार्थयोः संबन्धस्य विधायकं, गार्हपत्यस्येन्द्रशब्दो नामेति । कथं तर्हि । सिद्धसंबन्धेनेन्द्रशब्देन गार्हपत्यमुपतिष्ठत इति । न च शक्यते परशब्देन परो वदितुम् । किमत्र वचनं करिष्यति । अत्रोच्यते । गुणाद्वाऽप्यभिधानं स्यात्संबन्धस्या-

---

तेन कारकसामान्यं लक्ष्यते न द्वितीयया ।
येनात्र गार्हपत्योऽपि संबन्धात्स्याद्विशेषणम् ॥
न चावयवसंबन्धादिन्द्रो गृहपतेर्यतः ।
तेनात्र गार्हपत्यः स्याद्रूढ्याऽग्निप्रत्ययादृढात् ॥ २ ॥

ननु च मन्त्रोऽप्यशक्य एव गार्हपत्ये विनियोक्तुम् । तथा हि ।

गौणेऽपि तावदेतस्य वृत्तिः क्लेशेन जायते ।
अत्यन्तासदृशत्वात्तु न गौणोऽप्यत्र दृश्यते ॥

न हि वचनशतेनेन्द्रशब्दः शक्यो गार्हपत्याभिधानसमर्थः कर्तुम् ।

न वाऽदेर्गुणवच्छास्त्रादिन्द्रोऽग्निः पारिभाषिकः ।
न हि शब्दार्थसंबन्धः प्रसिद्धः शास्त्रहेतुकः ॥

अत्रोच्यते ।

---

१ (अ० १ पा० १ सू० ५)। २ यदप्यत्र ब्राह्मणवाक्ये गार्हपत्यशब्दवाच्योऽवयवयोगादिन्द्रः स्यादित्युक्तं तदपि रूढ्या योगबाधान्न युक्तमिति कारिकार्थः। ३ पा० सू० (१-१-२)। अत्-एङ् च यथा परिभाषया गुणो नैवमग्निः परिभाषयेन्द्र इत्यर्थः ।

शास्त्रहेतुत्वादिति । यद्यपि नेदं वाक्यं शब्दार्थसंबन्धस्य विधाने हेतुभूतं, तथाऽप्यनेनेन्द्रशब्देन शक्यं कर्तुं गार्हपत्याभिधानम् । कुतः । गुणसंयोगाद्गौणमामिदमभिधानं भविष्यति । भवति हि गुणादप्यभिधानम् । यथा सिंहो देवदत्तः, अग्निर्माणवक इति । एवमिहाप्यनिन्द्रे गार्हपत्य इन्द्रशब्दो भविष्यति । अस्ति तु चास्येन्द्रसादृश्यम् । यथैवेन्द्रो यज्ञसाधनमेवं गार्हपत्योऽपीति । अथवा, इन्दतेरैश्वर्यकर्मण इन्द्रो भवति । भवति च गार्हपत्यस्यापि स्वस्मिन्कार्ये ईश्वरत्वम् । तस्मादिन्द्रशब्देन यः प्रत्याय्यतेऽर्थः स प्रतीतः सादृश्याद्गार्हपत्यं प्रत्याययिष्यति । ऐश्वर्याद्वा प्रत्याययिष्यतीति न दोषः ॥ ४ ॥

## [ ३ ] तथाऽऽह्वानमपीति चेत् ॥ ५ ॥ पू०

स्तो दर्शपूर्णमासौ । तत्रेदं समाम्नायते । हविष्कृदेहीति त्रिरवघ्नन्नाह्वयति इति । तत्र संदेहः । किमेष मन्त्रोऽवहन्तिं प्रत्युपदिश्यत उत हन्तिरस्य कालं लक्षयतीति । कथं हन्तिं प्रत्युपदिश्यते कथं वा कालं लक्षयेत् । यद्येवं संबन्धः क्रियेत—हविष्कृदेहीत्यवघ्नन्निति ततो हन्तिं प्रत्युपदिश्यते । अथावघ्नन्नाह्वयतीति ततोऽस्य कालं लक्षयतीति । किं तावत्प्राप्तम् । तथाऽऽह्वानमपि । यथैन्द्री गार्हपत्यं प्रत्युपदिश्यते, एवमेष मन्त्रो हन्तिं प्रत्युपदिश्यते । एवं श्रुतिरनुगृहीता भवति । इत-

---

स्यादग्नेर्गौणमिन्द्रत्वं यज्ञसंबन्धकारितम् ।
इन्दत्यर्थानुसाराद्वा स्वकार्ये सोऽपि हीश्वरः ॥
तस्मादन्यथानुपपत्तेर्गौणमभिधानमिति सिद्धम् ॥ ४ ॥

( इति—ऐन्द्र्यधिकरणम् ॥ २ ॥ )

---

एवं तावन्मुख्यं कार्यं मन्त्राणामिति सापवादमवस्थितम् । अतः परमेतद्विचार्यते क उत्सर्गस्य विषयः कोऽपवादस्येति । तत्र ' हविष्कृदेहि ' इति या हविः करोति यजमानस्य पत्नी तदाह्वानप्रकाशनसमर्थो मन्त्रः, स किं तत्रैव विनियुज्येत, अवहन्तिसंयोगस्य कालार्थत्वेनाविरोधात् । अथवा वचनादयथार्थं पूर्वतरप्रतीतावघाताङ्गमेवेति । यदि हविष्कृदेहीत्यनेनावघ्नन्नाह्वयतीति विधीयते ततोऽवघाताङ्गत्वम् । अथावघ्नन्नेतेनाऽऽह्वयतीत्येवं संबन्ध्य रूपादेव प्राप्तमाह्वानकाले मन्त्रमनूद्य त्रिरिति विधीयते, ततोऽवघ्नन्नित्यस्य स्वकाललक्षणार्थत्वान्नायथार्थं वचनमिति यथार्थ एव मन्त्रः । किं

रथा लक्षणा स्यात् । हन्तिकालस्य मन्त्रस्य च संबन्धो भवेत् । न हन्तेर्मन्त्रस्य । एवं च सत्याह्वयतीत्ययमनुवादः । आह्वानं करोति । यो ह्येहीति ब्रूते स आह्वयति । तत्र केनचिद्गुणेन मन्त्रो हन्तिं प्रत्याययिष्यति । तस्मान्नाऽऽह्वाने विनियोक्तव्यः ॥ ५ ॥

न कालविधिश्चोदितत्वात् ॥ ६ ॥ सि०

नैतदस्ति हन्तिं प्रत्युपादिश्यत इति । किं तर्हि । काललक्षणा स्यात् । कुतः । त्रिराह्वयतीति त्रित्वमत्र विधीयते । यद्यस्मिन्नेव वाक्ये मन्त्रो विधीयेत, अनेकगुणविधानाद्वाक्यं भिद्येत । तस्मान्नैवमभिसंबन्ध एवमवघ्नन्निति । कथं तर्हि । अवघ्नन्नाह्वयतीति । नन्वस्मिन्नपि पक्षे मन्त्रो विधीयते कालश्च । तत्र स एव दोषो भवेत् । नेति ब्रूमः । अवहननकाल एवार्थेन हविष्कृदाह्वातव्या । तत्रायमेव संबन्धोऽनूद्यते । केवला तु त्रिरावृत्तिर्विधीयते । यत्तु काललक्षणार्थः शब्द इति । नैष दोषः । लौकिकी हि लक्षणा । मन्त्रोऽपि च रूपादेवाऽऽह्वाने प्राप्तः । सोऽप्यनूद्यत एव । चोदितश्च वाक्यान्तरेणावघातः शक्नोति कालं लक्षयितुम् ।

---

प्राप्तम् । अवहन्तिश्रुत्यनुग्रहादाह्वयतेश्च मन्त्ररूपादेव प्राप्तत्वादवहन्तेरेव हविष्करणे कर्तृत्वं कथंचिदस्तीत्ययथार्थत्वम् । गुणयोगात्प्रत्यायनं च ॥ ५ ॥

त्रिरभ्यासपरत्वात्तु न मन्त्रोऽत्र विधीयते ।
लक्षणे च शतुर्वृत्तिः प्राप्तं चान्यदनूद्यते ॥

अवघ्नन्नित्यत्र हि धात्वर्थोपसर्जनः कर्ता लक्षणार्थयुक्तः प्रतीयते । 'लक्षणहेत्वोः क्रियायाः' इति शतृप्रत्ययात् । तेन न क्वचिच्छ्रुतिपीडा । तस्मात्सर्वमेतदनूद्य त्रिरिति विधीयते नान्यत् । वाक्यभेदप्रसङ्गात् ।

योग्यत्वेन च सिद्धत्वात्कालोऽपि न विधीयते ।
अभिधामात्रमेवास्य विधिरित्यभिधीयते ॥
सकृदुच्चारणाद्यो वा त्रिरभ्यासेन जायते ।
अभ्यासे विहितेऽर्थेन स कालोऽस्मिन्विधीयते ॥

---

१ पा० सू० (३-२-१२६)। २ सकृदुच्चारणादिति कारिकाया अयमर्थः—त्रिरभ्यासे विहिते यः सकृदुच्चारणकालादधिकः कालस्त्रिरभ्यासेन जायते सोऽस्मिन्वाक्येऽर्थापत्तिप्रमाणेन विधीयते । अन्यथा तत्रापि श्रौतव्यापारत्वे वाक्यभेदापत्तेरिति ।

तस्मादाह्वाने विनियोक्तव्य इति ॥ ६ ॥

गुणाभावात् ॥ ७ ॥

इदं पदोत्तरं सूत्रम् । अथ कस्मान्न गुणादवहन्ति ब्रूते । हविष्करोति ह्यवहन्तिः । तस्माद्धविष्कृत् । किमेवं भविष्यति । रूपादेवावहन्तौ मन्त्रे प्राप्ते केवलं त्रिरावृत्तिमेव वक्ष्यति । न भविष्यति वाक्यभेद इति । अत्रोच्यते । गुणाभावाद्गौणमभिधानमवहन्तौ न संभवतीति । न ह्यसावाहूतोऽस्मीत्यवगच्छति । तत्राहृष्टार्थमाह्वानं स्यात् । यजमानस्य पत्न्यां हविष्कृति दृष्टार्थमाह्वानम् । तस्मान्न हन्तिमन्त्र इति ॥ ७ ॥

लिङ्गाच्च ॥ ८ ॥

लिङ्गं च भवति । वाग्वै हविष्कृद्वाचमेवैतदाह्वयति इति । न च वाचोऽवहन्तिना सादृश्यमस्ति । अस्ति तु यजमानस्य पत्न्या । सा

---

तथा च 'यावज्जीविकोऽभ्यासः' इत्यत्र कालाभ्यासयोरन्योन्यविधिहेतुत्वं व्याख्यातम् ॥ ६ ॥

अथ यदुक्तं हन्तिरेव हविष्कृद्भविष्यतीति । तत्रोच्यते ।

गुणाभावाद्धविष्कृत्त्वमन्त्राभावो यदोच्यते ।
आमन्त्रणादिसामर्थ्यं लिङ्गमाश्रीयते तदा ॥

अथवा पदोत्तरमेतत्सूत्रम् ।

त्रिरभ्यासपरत्वात्तु न मन्त्रोऽत्र विधीयते ।
रूपादेवावघाताङ्गं भवत्विति तदुच्यते ॥
यद्यप्यस्य हविष्कृत्त्वं कथंचित्कल्प्यते त्वया ।
तथाऽप्याह्वयतीत्येतद्व्यर्थं तस्मिन्नचेतने ॥
आमन्त्रणविभक्तिश्च प्रैषश्चैहीति मध्यमः ।
व्यर्थं मन्त्रे भवेत्सर्वमवघातपरे सति ॥

चेतनवत्यां तु पत्न्यामर्थवत् । तस्मान्न रूपादेवावघाताङ्गत्वमिति ॥ ७ ॥

एवं च वागित्यर्थरूपेणैकान्तिकेनैव स्त्रीत्वेन संस्तवो भविष्यति । अन्यथाऽनुपात्त-

---

१ (अ० २ पा० ४ अ० १ सू० १)। २ गुणाभावादिति—अचेतनेऽवघात आह्वानादिविषयत्वलक्षणगुणाभावाद्धविष्कृत्प्रकाशकस्य मन्त्रस्य तत्र विनियोगाभावो यदोच्यते तदा 'लिङ्गाच्च' इति सूत्रे लिङ्गपदेनाऽऽमन्त्रणादियोग्यत्वरूपं पत्न्याः सामर्थ्यं मन्त्रस्य पत्न्याह्वानाङ्गत्वेनाऽऽश्रीयते न तु स्त्रीलिङ्गत्वेन स्तुतिरित्यर्थः ।

हि स्त्री। वागिति च स्त्रीलिङ्गः। अवहन्तिस्तु न स्त्री न पुमान् न नपुंसकमिति। नन्ववहन्तेरपि स्त्रीलिङ्गः शब्दोऽस्ति क्रियेति। अत्र ब्रूमः। न नियोगतोऽवहन्तेः स्त्रीलिङ्गः शब्दः। पुंलिङ्गोऽपि तस्यास्ति, अवघात इति। नपुंसकलिङ्गोऽपि कर्मेति। आपि च। पत्न्याः स्वरूपेण सादृश्यमवहन्तेः पररूपेण शब्देन। तस्मात्पत्न्यां हविष्कृति लिङ्गमनुरूपतरं भवति ॥ ८ ॥

विधिकोपश्चोपदेशे स्यात् ॥ ९ ॥

अवहन्तिमन्त्रे सत्यस्मिन्मन्त्रे विध्यन्तरकोपः स्यात्। अपहतं रक्ष इत्यवहन्ति, अपहता यातुधाना इत्यवहन्ति इति। तत्र पक्षेऽभावाच्छ्रित्यवच्छ्रुतिरुपरुध्येत। तस्मादवघ्नन्निति काललक्षणार्थ इति ॥ ९ ॥

[ ४ ] तथोत्थानविसर्जने ॥ १० ॥ सि०

ज्योतिष्टोमे श्रूयते—उत्तिष्ठन्नन्वाह, अग्नीदग्नीन्विहर इति। तथा, व्रतं कृणुतेति वाचं विसृजति इति। तत्र संदेहः। किमुत्थानं वाग्विसर्जनं च प्रति मन्त्रयोरुपदेश उत कालार्थः संयोग इति। अत्र पूर्वाधिकरणन्यायोऽतिदिश्यते। यस्तत्र पूर्वः पक्षः स इह पूर्वः पक्षः। यस्तत्र सिद्धान्तः स इह सिद्धान्तः। अग्नीदग्नीनित्येवमुत्तिष्ठन्नन्वाहेति। व्रतं कृणुतेत्येवं वाचं विसृजतीति पूर्वः पक्षः। लक्षणाभावादुत्तिष्ठन्नन्वाहेति सिद्धान्ते संबन्धः। व्रतं कृणुतेत्युच्यमाने वाचं विसृजतीति वाक्येन पूर्वः पक्षः। लिङ्गेन सिद्धान्तः। यद्यपि च शक्यत उत्थानक्रियाऽग्नीदग्नीन्विहरेति वक्तुम्। उत्थानेनाग्निरिध्यते, वह्निश्च विह्रियत इति। व्रतं कृणुतेति च वागभिधानम्। त-

---

स्त्रीलिङ्गक्रियादिपदेनानेकान्ताव्यक्तलिङ्गेन शब्दधर्मतया कथंचित्कल्प्यः स्यात्। तस्मादाह्वनाङ्गत्वमिति ॥ ८ ॥

अवघातमन्त्रान्तरविरोधश्चान्याय्यः स्यात्। आह्वाने त्वयमेवेत्यविरोधः ॥ ९ ॥

( इति—हविष्कृन्मन्त्रविनियोगाधिकरणम् ॥ ३ ॥ )

---

अतिदेशसूत्रत्वात्सर्वे पूर्वसूत्रार्था योजयितव्याः। पूर्वत्रानुवादे कालार्थत्वमुक्तम्। इदानीं विधानार्थेऽपीति विशेषः। त्रिरभ्यासपरत्वाच्च तत्र मन्त्रोपदेशो न जातो न त्विह तथेति पूर्वपक्षे बीजम्। उत्थानेनाग्निरिध्यत इति—अनेनोत्थानं प्रकाश्यत

थाऽप्यदृष्टार्थं वचनं भवतीति न मन्त्रयोरुत्थानविसर्जनार्थता कल्प्येत । कल्प्यमानायां च मन्त्रान्तरं विहितं बाध्येत । याः पशूनामृषभो वाच इति । अपि चोत्थानवाग्विसर्गौ प्रति मन्त्रौ विधीयमानावदृष्टार्थौ स्याताम् । प्रेषणे तु दृष्टार्थौ । तस्माल्लक्षणैवात्र न्याय्या ॥ १० ॥

## [५] सूक्तवाके च कालविधिः परार्थत्वात् ॥ ११ ॥ पू०

दर्शपूर्णमासयोः श्रूयते—सूक्तवाकेन प्रस्तरं प्रहरति इति । तत्र संदेहः । किं सूक्तवाकः प्रस्तरप्रहरणं प्रत्युपदिश्यत उतेयं काललक्षणेति । तदुच्यते । काललक्षणेति । कुतः । सूक्तवाकस्य देवतासंकीर्त-

---

इति प्रतिपाद्यते । यदाऽयमुत्थानाङ्गं भवति तदा प्रैषाभावात्पराधिकारो नास्तीति प्राप्तकालतायां लोटं कल्पयित्वाऽध्वर्युकतृकाण्येवाग्निविहरणादीनि भवेयुः । अतश्च तदीयमुत्थानं तेषां कर्तृत्वेन विवक्ष्यमाणमग्नीदित्यादिभिः शक्यं प्रकाशयितुम् । एवं 'व्रतं कृणुत' इति वागभिधानं वाक्कृप्यत्विति वदास्याधारत्वाद्वाचो यदास्यस्य व्रतकरणे कर्तृत्वं तच्छक्यं वाच्येवोपचरितुं तत्र व्रतं कर्तुं प्राप्तः काल इति । तात्वाद्याधिष्ठानभेदाच्च बहुवचनम् । गुणाभावात्—मन्त्रगुणाभावादित्येतदेवादृष्टार्थत्वप्रसङ्गमुखेनोत्तरम् । न हि मध्यमपुरुषः परप्रेषणमन्तरेणोपपद्यत इति वक्ष्यामः । लिङ्गमपि किंचिदन्वेष्टव्यम् । विधिकोपश्च वाग्विसर्जने 'याः पशूनामृषभो वाच' इति मन्त्रान्तराम्नानात् ॥ १० ॥

( इति—अग्निविहरणादिमन्त्रविनियोगाधिकरणम् ॥ ४ ॥ )

---

देवताप्रकाशस्तुग्धारणाभ्यां कृतार्थत्वादङ्गाङ्गिभावापेक्षा नास्तीति[1] कालार्थता[2] । सर्वत्र[3] च कृतार्थयोः संबन्धे कालार्थत्वं स्थास्यति[4] । तृतीयां चेत्थंभूतलक्षणार्थां मन्यते । प्रस्त[5]रकृतार्थत्वाभिधानं च प्रतिपाद्यमानप्रधानत्वादस्य सूक्तवाकाङ्गत्वं तद्वाच्यदेवताङ्गत्वं

---

१ नास्तीति—( अ० ३ पा० ८ अ० ११ सू० २२ ) इत्यनेन न्यायेनेत्यर्थः । २ कृतार्थत्वादिति—सूक्तवाकप्रस्तरयोरिति शेषः । ३ सर्वत्र च—दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेतेत्यादावित्यर्थः । ४ ( अ० ४ पा० २ ) अत्रेति शेषः । ५ प्रस्तरस्य चेति भाष्यतात्पर्यमाह—प्रस्तरेत्यादिना । यद्यपि प्रस्तरे कृतार्थत्वाभिधानं नाङ्गत्वनिराकरणार्थम् । सिद्धान्तिनोऽप्यनभिप्रेतत्वात् । तथाऽपि यदि कश्चित्प्रहरणस्य सूक्तवाकाङ्गत्वं तत्प्रकाश्यदेवताङ्गत्वं वा ब्रूयात्तदा कालार्थपूर्वपक्षासिद्धेः प्रहरणस्य च प्रस्तरकृतार्थत्वमन्तरा तदर्थत्वायोगादित्येवं प्रहरणस्य प्रस्तरार्थत्वप्रतिपादनद्वारा सूक्तवाकाङ्गत्वनिराकरणार्थमेव तदिति वेदितव्यम् ।

नार्थत्वात् । प्रस्तरप्रहरणं च प्रत्यशक्तेः । प्रस्तरस्य च स्रुग्धारणार्थत्वात् ॥ ११ ॥

उपदेशो वा याज्याशब्दो हि नाकस्मात् ॥ १२ ॥ सि०

उपदेशो वा प्रस्तरप्रहरणं प्रति मन्त्रस्य स्यात् । एवं श्रुतिविहितोऽर्थो भवति । सूक्तवाकेनेति करणविभक्तिसंयोगात् । इतरथा लक्षणा स्यात् । सूक्तवाकेन लक्षणेन प्रस्तरं प्रहरेदिति । एवं च कृत्वा याज्या-

---

वा न घटत इत्यस्य प्रतिपादनार्थम् । तथा[1] सदेवतस्य सूक्तवाकस्यापि तदङ्गत्वमिति ॥ ११ ॥

'सूक्तवाकेन प्रस्तरं प्रहरति' इति प्रत्यक्षात्क्रियासंबन्धात्करणत्वं गम्यमानं न शक्यमुत्स्रष्टुम्, कारकविभक्तिबलीयस्त्वात् । एवं च श्रुतिवृत्तः सूक्तवाक एव कार्येण संभन्त्स्यते । अन्यथा तल्लक्षितः कालः संबध्येत । तथा चाङ्गत्वे सति साधर्म्याद्याज्याशब्द उपपत्स्यते 'सूक्तवाक एव याज्या' इति । किं पुनरस्य पारमार्थिकमेव याज्यात्वमुतोपचारमात्रम् । कश्चात्र विशेषः । सति याज्यात्वे तद्धर्मैर्भवितव्यम् 'आसीनो यजति' 'अनवानं यजति' 'याज्याया अधि वषट्करोति' 'पुरोनुवाक्यां च प्रथमं प्रयुङ्क्ते' इत्यादिभिः । अथ स्तुतिमात्रं ततो नैषां कश्चिदादर्तव्य इति । किं प्राप्तम् । भवितव्यं धर्मैः । ययेज्यते सा याज्या । सूक्तवाकेन चेज्यते । तस्मादस्ति याज्यात्वम् । तत्रैतत्स्यात् । अस्त्रीलिङ्गत्वादनृचि स्त्रीप्रत्ययो न प्राप्नोति । नैष दोषः । समिदादियाज्यास्वनृक्ष्वपि याज्यात्वप्रसिद्धेः । अथोच्येत, आध्वर्यवेषु दर्विहोमसाधनेषु सत्यपि यागकरणत्वे याज्यात्वं न दृष्टमतो नैतदैकान्तिकं कारणमिति । यत्रैव याज्याशब्दः प्रयुक्तः सैव केवला याज्या । तेन तर्हि 'सूक्तवाक एव याज्या' इत्यत्रापि प्रयोगाद्भवितव्यं धर्मैः । न चास्यौपचारिकत्वम् । मुख्यकारणसंनिधेः प्रत्यक्षत्वात् । अपि च सामान्यशब्दोऽयं याज्येति । स न शक्यो लक्षणमन्तरेण प्रयोगतो विविक्तविषयोऽवधारयितुम् । तत्रैतल्लक्षणं स्यात् । हौत्रेण येनेज्यते तद्वस्तु याज्येति । तथा सति सूक्तवाकेऽपि प्रसङ्गः । तस्मान्मुख्यमेवास्य याज्यात्वमित्येवं प्राप्ते ब्रूमः ।

येन मन्त्रेण यागाङ्गं होता यजति देवताम् ।
प्रसिद्धेस्तस्य याज्यात्वं सूक्तवाको हि नेदृशः ॥

---

१ एवं प्रस्तरप्राधान्यप्रतिपादनेन प्रहरणस्य प्रतिपत्तित्वावगतेः प्रतिपत्तेश्च देवतया कार्याभावाद्देवताप्रकाशकस्य सूक्तवाकस्य प्रहरणाङ्गत्वं न घटत इत्येवमर्थं च प्रस्तरस्योपयुक्तत्वाभिधानमिति प्रयोजनान्तरमाह—तथेत्यादिना ।

प्रकृतौ हि सर्वमेव तादर्थ्योत्पत्त्या वस्तु निरूप्यते । याज्यात्वं च त्यज्यमानहविर्द्रव्यदेवतोद्देशार्थविहितमन्त्रत्वेनावधारितम् । न च सूक्तवाकस्त्यज्यमानप्रस्तरदेवतोद्देशार्थमुत्पन्नः । इष्टदेवताभिधानस्वरूपत्वात् । लिङ्गं श्रुत्या बाध्यत इति चेत् । न । श्रुतेर्लिङ्गविनियोगाभ्यनुज्ञामन्तरेणाग्निसेकादिवदसामर्थ्यात् । तथा चोत्तरसूत्रे वक्ष्यामः । तेन स्वतस्तावन्न याज्यात्वम् । न चान्या काचिदेवंविषया याज्याऽस्ति । यस्याः कार्ये वर्तमानो याज्याधर्माल्लँभेत । प्राक्च यस्य यागत्वमवधारितं तस्य साधनं पश्चाच्चोद्यमानं याज्येत्यवगम्यते । न त्वत्र प्राक्सूक्तवाकसंबन्धात्केनचिद्यागत्वमवधारितम् । तदितरेतराश्रयं प्राप्नोति । याज्यायोगाद्यागो यागसंबन्धाद्याज्येति । अथैवं परिह्रियेत । विनैव तावद्याज्याव्यपदेशेन सूक्तवाकमात्रतया गृह्यमाणो यागे विनियुज्येत ततो याज्यातस्तदभिधेयदेवतासंबन्धलभ्ययागत्वप्रधानप्रहरणसंबन्धाद्याज्यात्वं लभ्यत इति । तदुच्यते ।[1]

येनोत्पत्तौ न याज्यात्वं विनियोगे च लभ्यते ।
तस्य पश्चात्कथं नाम तल्लाभोऽध्यवसीयते ॥

यो हि यूपादिशब्दो न कचित्प्रसिद्धः स एवं प्रसिद्धिं लभते । अयं पुनर्याज्याशब्द उत्पत्तिवेलायामेव विनियोगवेलायां वाऽर्थं लभमानो नोत्तरकालभावमपेक्षते । येऽपि च याज्याधर्मास्तेऽपि प्रथमसिद्धेषु यागेषु लब्धात्मानो नेदं क्लेशेन लभ्यमानं याज्यात्वं प्रतीक्षन्ते । यदि तु विकृतिर्भवेत्ततः परिधिखलेवाल्योरिव यूपत्वं कार्येण याज्यात्वमध्यवसीयेत । प्रकृतिस्त्वियं नात्र कार्यपूर्वकं धर्मनिरूपणमतोऽपि न याज्याधर्माः । तथा च 'सूक्तवाक एव याज्या' इत्येवकार उपचारं द्योतयति । अयाज्याया हि याज्योपचारे सत्येवमुपपद्यते न मुख्य एव याज्यात्वे । मुख्यायां त्वाहुत्या नैवकारः प्रयुक्तः । तदाहुतिः पारमार्थिकी ।

न च प्रहरणं यागमात्ररूपेऽवतिष्ठते ।
होम एव त्वयं स्पष्टः प्रक्षेपाधिक्यचोदनात् ॥
आघारादि यथा द्रव्यक्षारणाद्धोमतां गतम् ।
तथा प्रक्षेपरूपत्वाद्धरणस्यापि होमता ॥
होमाङ्गस्य च याज्यात्वं न कस्यचिदपीष्यते ।
निगदत्वाद्विशेषेण सूक्तवाके निषिध्यते ॥

---

१. 'किं पुनरस्य पारमार्थिकमेव याज्यात्वम्' इत्यादिना प्रसङ्गाच्चिन्तान्तरं प्रस्तुत्य पराभिमतं च याज्यात्वं प्रदूष्य निर्दुष्टं स्वाभिप्रेतं याज्यात्वं निर्वक्ति—याज्यात्वं चेत्यादिना । तत्त्वं तु [illegible] विहितेज्यमानद्रव्यसंबन्ध्युद्देशाङ्गभूतदेवताप्रकाशकमन्त्रत्वं याज्यात्वं याज्ञिकप्रसिद्धमेव तं विद्येयम् ।

